(सुधा)

अत्र ध्वनित्वं प्रतिपादयति—अत्र हीति । चक्रादिलेखनेन तत्रासाधारणपुरुषत्वं निषिध्य पुण्डरीकाक्षत्वे व्यञ्जितेऽन्यथा तत्रापीदृशरूपाभावात् मकरध्वजलेखनेन मन्मथत्वं व्यञ्जितम् । साधारणनरपुण्डरीकाक्षयोस्तयोन्मार्जनादित्यलम् ।

अत्र गङ्गाधरकृतः—नारायणव्यञ्जने द्वौ भागौ उपमेयनिषेधः, उपमानारोपश्च । तत्रोपमानारोपभागः पुण्डरीकाक्षोऽयमित्याकारश्चक्रादिलेखनेन तयोस्तत्सम्बन्धितया व्यङ्क्तुं शक्यः । उपमेयनिषेधभागस्तु न, आरोपमात्रव्यञ्जनसमर्थस्य व्यञ्जकस्य तादृशनिषेधव्यञ्जनसामर्थ्याभावात् नाप्यनुभवसिद्धः, येन तद्व्यञ्जनतायोगगवेषणं स्यात् । न च पुरुषतादात्म्यनिषेधं विना नारायणतादात्म्यानुपपत्त्या निषेधोऽपि व्यज्यत इति वाच्यम्, 'मुखं चन्द्रः' इत्यादावपि मुखनिषेधमन्तरेण चन्द्रारोपानुपपत्त्या तत्र मुखनिषेधाभ्युपगमे रूपकोच्छेदापत्तेः । न च मुखत्वसामानाधिकरण्येन चन्द्रतादूप्यस्यारोप्यमाणतया न मुखनिषेध इति वाच्यम्, साधारणपुरुषत्वसामानाधिकरण्येन पुण्डरीकाक्षारोपसम्भवाद् रूपकध्वनेरेव औचित्यात् । न च पूर्वार्धे मास्त्वपह्नुतिः, तथापि चक्रादिदूरीकरणेन 'नायं पुण्डरीकाक्षः' इति निषेधस्य पुष्पचापलिखनेन काम इत्यंशस्य च व्यञ्जयितुं शक्यत्वादुत्तरार्ध एव मास्त्विति वाच्यम्, पुण्डरीकाक्षस्य वर्ण्यत्वाभावेन तन्निषेधस्यापह्नुताघटकत्वात्, आरोपस्यारोपविषयत्वेन त्वया व्याख्यानात्, प्रसक्तयत्किञ्चिन्निषेध्यवस्तुसामानाधिकरण्येन क्रियमाणवस्त्वन्तरारोपत्वमेव तत्त्वमिति लक्षणे तु तस्य योग्यत्वात् । तस्मादेसदुदाहरणीयम्—

> 'दयिते रदनत्विषां मिषादयि तेऽमी विलसन्ति केसराः ।
> अपि चालकवेषधारिणो मकरन्दस्पृहयालवोऽलयः ॥'

अत्र नैता रदनत्विषः, किन्तु किञ्जल्कपरम्पराः, न चैते अलकाः, अपि त्वलयः, इति पूर्वोत्तरार्धाभ्यां द्वे अपह्नुती, ताभ्याञ्च 'न त्वं नारी, किन्तु कमलिनी' इति तृतीयापह्नुतेर्व्यङ्ग्यत्वम् । तत्सम्बन्धिवस्तुनिषेधारोपयोस्तन्निषेधारोपनिवेदकताया न्याय्यत्वादित्याहुः ।

तत्र ब्रूमः—अपह्नुतौ निषेधस्य दीक्षितसम्मततैव । 'मुखं चन्द्रः' इत्यत्र मुखत्वं धर्मितावच्छेदकीकृत्य चन्द्रतादात्म्यारोपस्यानुभवसाक्षित्वेनाङ्गीकारेऽप्यत्र पुण्डरीकाक्षभेदव्याप्यचक्राद्यभावस्य साधारणपुरुषधर्मस्य चक्रादिनापसारणे साधारणपुरुषनिषेधं विना तत्तादात्म्यस्य व्यञ्जयितुमशक्यत्वात् । तस्माद्दीक्षिताशयमविचार्य तदुक्तिरिति बोध्यम् । श्रीमद्विश्वेश्वरचरणैस्तु—अनुग्राह्यानुग्राहकभावादिनाप्युदाहृतं, यथा—

> 'स्मितं नैतत्किन्तु प्रकृतिरमणीयं विकसितं, मुखं ब्रूते मूढः कुसुममिदमुद्यत्परिमलम् ।
> स्तनद्वन्द्वं मिथ्या कनकनिभमेतत्स्तनयुगं, लता सेयं रम्या भ्रमरकुलनम्या न रमणी ॥'

अत्र स्मितापह्नुवस्य मुखापह्नुतावनुग्राहकत्वम् । मुखस्तनापह्नुतेर्नायिकापह्नुतौ तत्त्वम् ।

मालारूपा यथा—

> 'क्वापि क्षीरनिधिच्छलात्क्वचिदपि प्रोत्फुल्लकुन्दच्छलात्,
> कुत्रापीन्द्रगजच्छलात् क्वचिदपि प्रालेयरश्मिच्छलात् ।
> कुत्रापि स्मरवैरिदेहमिषतः कुत्रापि शेषच्छलात्,
> त्रैलोक्यं हिमतुल्यकीर्तिरटति श्रीवाजिचन्द्रप्रभोः ॥'

इति बोध्यम्। यत्तु गङ्गाधरकृता कुवलयानन्दे दीक्षितव्याख्यातां पर्यस्तापह्नुतिमुद्दिश्य नायमपह्नुतिभेदः, सामान्यलक्षणानाक्रान्तत्वात्। उपमेयमसत्यं कृत्वोपमानस्य सत्यतया स्थापनमित्यर्थकस्य 'प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपह्नुतिः' इति प्रकाशोक्तलक्षणस्य स्फुटमप्रवृत्तेः। 'विषयापह्नवे वस्त्वन्तरप्रतीतावपह्नुतिः' इति सर्वस्वोक्तलक्षणस्यापि तत्र प्रसाराभावाच्च। किञ्च चित्रमीमांसोक्तलक्षणस्य 'प्रकृतस्य निषेधेन' इत्यादिरूपस्यापि तत्राव्याप्तेश्च।

'तस्मान्नायं सुधांशुः' इत्यादौ हठारोपरूपकमेव वक्तुं योग्यम्, द्वयोस्सामानाधिकरण्यस्य सत्त्वादिति दूषणं प्रतिपादितम्। तत्रापि ब्रूमः—काव्यप्रकाशादिलक्षणानुसारेण लक्ष्यव्यवस्थानियमाभावात्। स्वलक्ष्यानुसार्यन्यप्रतिपादितलक्षणस्य व्यवस्थापादकत्वात्। अन्यथा भवत्प्रतिपादितपरिणामादेरप्युपमाद्यन्तर्गतत्वस्य काव्यप्रकाशादिप्रतिपादितत्वेन पृथक् कथनवैयर्थ्यापत्तेः। किञ्च पर्यस्ता आरोपव्यधिकरणापह्नुतिर्यत्रेति यौगिकार्थाङ्गीकारेऽपि रूपकस्य तत्र वक्तुमयोग्यतैव। अलङ्काररत्नाकरोक्तलक्षणानुसारेण यद्भेदस्य पृथक्कथने दूषणाभावादित्यलं अप्रकृतचिन्तया।

धरानन्देन रचिता व्याख्यापह्नुतिबोधिनी।
टीकायां चित्रमीमांसासुधायामाप पूर्णताम्॥

इति वासिष्ठगोत्रीयमिश्ररामबलस्य पुत्रेण धरानन्देन निर्मितायां
चित्रमीमांसासुधायामपह्नुतिप्रकरणं समाप्तम्।



# अथ उत्प्रेक्षानिरूपणम्

अत्रान्यधर्मसम्बन्धादन्यत्वेनोपतर्कितम् ।
प्रकृतं हि भवेत्प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते ॥

( भारती )

'जहाँ प्रकृतभिन्न धर्मसम्बन्ध से, अन्यत्व द्वारा उपतर्कित हो, बुद्धिमान् जन उसे ही उत्प्रेक्षा अलङ्कार कहते हैं।'

अन्य सम्बन्ध से यहाँ तात्पर्य है— प्रकृत का भिन्न पदार्थ के रूप में की जाने वाली सभावना।

**विमर्श**—यह एक सादृश्यमूलक अभेदप्रधान अलकार है। क्योंकि इस अलङ्कार में उपमेय और उपमान में साम्य एव अभेद दोनों होता है। तात्पर्य यह है कि कवि इसके उपमेय में उपमान की कल्पना करते हुए दोनों में सादृश्य की ही स्थापना करता है। इस अलङ्कार में उपमेय गौण एव उपमान उत्कृष्ट या प्रधान दिखायी पडता है। क्योंकि बलपूर्वक ही कवि उपमान के साथ उपमेय का साम्य दिखाता है। उपमेय में वे सारे गुण हों या नहीं, किन्तु, कवि उनकी सभावना उपमान के रूप में करता ही है। किसी भी अलङ्कार के प्राण हैं—उनके चमत्कार या सौन्दर्य। और इसी की पूर्ति के लिए इस अलङ्कार में उपमान का काल्पनिक वर्णन किया जाता है। क्योंकि यहाँ उपमा में उपमेय और उपमान मे सादृश्य दिखाया जाता है। जहाँ रूपक में इन दोनों की एक रूपता होनी है, वहाँ उत्प्रेक्षा में उनके सादृश्य की सभावना की जाती है। सभावना सन्देह और निश्चय के बीच की स्थिति है।

( सुधा )

**एवमपह्नुतिं व्याख्याय निश्चितविषयतया सम्भावनाविषयिणीमुत्प्रेक्षां वक्तुं प्रतिजानीते—अथेति। अत्र निरूप्यत इति शेषः। उत्प्रेक्षालक्षणं प्रतिपादयति—अत्रेति। यत्र प्रकृतम् अन्यधर्मसम्बन्धादन्यत्वेनोपतर्कितं भवेत्, प्राज्ञास्तामुत्प्रेक्षां प्रचक्षते कथयन्तीत्यन्वयः। अन्यसम्बन्धेन प्रकृतस्यान्योपतर्कणमुत्प्रेक्षेति तल्लक्षणम्।**

( चित्र० )

यथा—

बालेन्दुवक्राण्यविकाशिभावाद् बभुः पलाशान्यतिलोहितानि।
सद्यो वसन्तेन समागतानां नखक्षतानीव वनस्थलीनाम्॥

अत्र प्रकृतानि पलाशकुसुमान्यप्रकृतनखक्षतधर्मवक्रत्वलौहित्यसंबन्धान्नखक्षतत्वेनोपकल्पितानि। तर्कः संभावनामात्र न त्ववधारणम्। तदीयधर्मो हि तत्तादात्म्यसंभावनामात्रहेतुर्न व्याप्तिपक्षधर्मतावल्लिङ्गवदवधारणहेतुः। न चात्रेवशब्दस्य सादृश्यपरत्वमित्युपमाशङ्का कार्या।

उपमाया यत्र क्वचित्स्थितैरपि नखक्षतैः सह वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसंबन्धित्वविशेषणकल्पनानपेक्षत्वात् । पलाशमुकुलानां नखक्षततादात्म्यसंभावनायामेव तथाविधविशेषणस्योपयुक्तत्वात् । एवमन्यत्रापि यत्र यत्राप्रकृततादात्म्यसंभावनोपयुक्तविशेषणकल्पना तत्र सर्वत्राप्युत्प्रेक्षावगन्तव्या । यथा—

( भारती )

जैसे—कलिका रूप होने से अर्द्धचन्द्र के सदृश टेढ़े अत्यन्त लाल वर्ण के पलाश के फूल, 'वसन्तरूपी पुरुष के साथ मिली हुई वनस्थलीरूपी स्त्री के शरीर पर ताजे लगे हुए नखक्षतों के समान शोभित होते थे ।'

यहाँ प्रकृत पलाश के फूलों में अप्रकृत अर्थात् भिन्न धर्मी नखक्षतों की सभावना—दोनों पदार्थों में रहने वाले वक्रत्व और लोहितत्व रूप धर्म को निमित्त मान कर की गयी है । अर्थ शब्द की अनेकार्थता की आशका कर उसका फलितार्थ कहते हैं कि यहाँ तर्कत्व रूप धर्म का उसके साथ तादात्म्य सभावना मात्र में हेतुता है, न कि व्याप्तिपक्षधर्मता की तरह अवधारणा में हेतुता है । फलस्वरूप ऐसा अर्थ करने से अनुमान अलङ्कार में अतिव्याप्ति का निराकरण होता है । 'इव' शब्द का सादृश्यार्थक प्रयोग में 'उपमा' की आशका का निराकरण करते हुए कहते हैं कि जहाँ कहीं भी स्थित नखक्षत के साथ उपमा कहने के कारण वसन्तरूपी नायक के आने पर वनस्थली के सम्बन्धित्व विशेषण रूप कल्पना की अपेक्षा का अभाव है । क्योंकि उसके विशेषण का उसके साथ तादात्म्य की सभावना में ही उपयोग है । इस प्रकार प्रतिपादित अर्थ का जहाँ जहाँ अप्रकृत तादात्म्य सभावना के उपयुक्त विशेषण की कल्पना है, वैसी सभी जगहों में उत्प्रेक्षा ही जाननी चाहिए । जैसे—

( सुधा )

तदुदाहरणमाह—यथेत्यादिना । अविकाशिभावात् बालेन्दुवक्राणि अतिलोहितानि वसन्तेन समागतानां वनस्थलीनां सद्यो नखक्षतानीव बभुरित्यन्वयः । अत्र लक्षणसमन्वयं दर्शयति—अत्रेति । प्रकृतेषु पलाशमुकुलेष्वप्रकृतानां नखक्षतानां वक्रत्वलौहित्यरूपधर्मसम्बन्धान्नखक्षतत्वेन सम्भावितत्वात् लक्षणसमन्वयः । तर्कशब्दस्यानेकार्थतामाशङ्क्यार्थमाह—तर्क इति । अर्थस्य फलमाह—नत्विति । फलितार्थमाह—तर्कत्वरूपधर्मस्य तत्तादात्म्यसम्भावनामात्रहेतुत्वम् , व्याप्तिपक्षधर्मत्ववल्लिङ्गवदवधारणहेतुत्वं नास्तीति भावः । तेनानुमानालङ्कारे नातिव्याप्तिरित्यर्थः । इव शब्दस्य सादृश्यार्थकस्य प्रयोग उपमामाशङ्क्य निराकरोति—न चेति । तत्र हेतुमाह—क्वचिदिति । यत्र कुत्रापि स्थितैर्नखक्षतैस्सहोपमाया वक्तुं शक्यतया वसन्तनायकसमागतवनस्थलीसम्बन्धित्वविशेषणकल्पनस्यापेक्षणाभावात्, तद्विशेषस्य तत्तादात्म्यसम्भावनायामेवोपयोगात् । एवं प्रतिपादितमर्थमन्यत्राप्यतिदिशति—एवमन्यत्रापीति ।

( चित्र० )

उवाह या तनुलता भृङ्गालीरोमवल्लरीम् ।
पद्माद्विमुक्तां वैमल्याद्बिम्बितामिव वेणिकाम् ॥

उपमा यत्र क्वचित्स्थितयापि वेणिकया वक्तुं शक्येति तत्रानुपयुक्ता, वैमल्यात् पुरोभागप्रतिबिम्बितत्वरूपविशेषणकल्पना तादात्म्यसंभावनार्था। यत्र तु संभावनोपयुक्तविशेषणकल्पनारहितमुपमानं निबध्यते तत्र परमिव-शब्दः सादृश्यपर इत्युपमालङ्कारः।

अमुमेव विभागमभिप्रेत्य चक्रवर्तिनोक्तम्—'यदायमुपमानांशो लोकतः सिद्धिमृच्छति' इत्यादि। दण्डिनापीवशब्दस्योत्प्रेक्षाव्यञ्जकत्वमुक्तम्—

( भारती )

'जो शरीररूपी लता काले भौंरों की पंक्ति की तरह निर्मलता के कारण पीछे की ओर मुक्त एवं बिम्बित रोमराजि स्वरूप वेणी का वहन कर रही है।'

जहाँ कहीं अवस्थित अगर वेणी के कारण उपमा अलकार इस उदाहरण में कहना चाहें तो वह अनुचित ही होगा। क्योंकि निर्मलता के कारण आगे की ओर प्रतिबिम्बितत्वरूप विशेषण की कल्पना से तादात्म्य, यहाँ सभावनार्थक है। जहाँ पर सभावना उपयुक्त विशेषण की कल्पना से रहित उपमान को निबन्धित करती है वहाँ ही 'इव' शब्द का सादृश्यपरक होने के कारण उपमा अलकार होता है।

इसी विभाग को लक्ष्य कर चक्रवर्ती ने कहा था—**'यदायमुपमानांशो लोकतः सिद्धि-मृच्छति'** इत्यादि, अर्थात् जब यह उपमानाश 'इव' शब्द से लोकप्रसिद्ध साधर्म्य की प्रतीति होती है तब उपमा अलङ्कार होता है। एव जहाँ लोक में अप्रसिद्ध एव कविकल्पित साधर्म्य का बोध होता है—वहाँ उत्प्रेक्षा अलङ्कार ही होता है। ( क्योंकि उपमा में उपमेय की उपमान से तुलना की जाती है, जब कि उत्प्रेक्षा में उपमान की उपमेय में सभावना। उत्प्रेक्षा अभेदप्रधान या अध्यवसायमूलक अलकार है और उपमा भेदाभेदप्रधान साधर्म्यमूलक। 'इव' वाचक उपमा एव उत्प्रेक्षा दोनों में ही प्रयुक्त होता है। ) दण्डीने भी 'इव' शब्द का उत्प्रेक्षाव्यञ्जकत्व ही अर्थ कहा है।

( सुधा )

उदाहरणान्तरेष्वेतदेवाह—उवाहेति। या तनुलता भृङ्गालीरोमवल्लरीं वैमल्याद् नैर्मल्यात् पश्चाद्विमुक्तां बिम्बितां वेणिकामुवाहेत्यन्वयः। यत्र कुत्रापि स्थितवेण्योपमाया वक्तुं शक्यतया वैमल्यात् पुरोभागे प्रतिबिम्बितत्वरूपविशेषणस्यानुपयोगात् तत्तादात्म्य-संभावनायामेव तत्सार्थक्याद्युत्प्रेक्षैव नोपमेत्यर्थः। इवशब्दस्योपमाप्रयोजकता यत्र तं दर्शयति—यत्रेति। सम्भावनोपयोगिविशेषणरहितोपमाननिबन्धने इवस्य सादृश्यपरत्वे-नोपमाप्रयोजकत्वमिति तद्भावः। अत्र चक्रवर्त्युक्तं प्रमाणयति—अमुमेवेति। तदुक्तविभाग-माह—यदेति। दण्डिन्युक्तं प्रमाणयति—दण्डिनापीति।

( चित्र० )

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः॥ इति।

अत्रादिशब्देन तर्कयामि, संभावयामि, जाने, उत्प्रेक्षे, स्यात्, इत्येवमा-दीनां संग्रहः। अत्र च—

कस्तूरिकामृगाणामण्डाद्गन्धगुणमखिलमादाय ।
यदि पुनरहं विधिः स्यां खलजिह्वायां निवेशयिष्यामि ॥

( भारती )

'जहाँ उत्प्रेक्षाव्यञ्जक 'मन्ये' 'शंके' 'ध्रुवम्' 'प्राय.' 'नूनम्' इत्यादि एव 'इव' आदि शब्द वाच्य रहेंगे वहाँ वाच्योत्प्रेक्षा होगी ।'

यहाँ आदि शब्द से 'तर्क करता हूँ' 'सभावना करता हूँ' 'जानता हूँ' 'उत्प्रेक्षा करता हूँ' 'होता है' इस प्रकार के शब्दों का सग्रह है । यहाँ और—

'शायद यदि मै पुन. ब्रह्मा बनूँगा तो कस्तूरी मृगों के अण्डकोष से सारे सुगन्धादि रूप गुणों को दुष्टों की जिह्वा मे निवेशित कर दूँगा ।'

( यहाँ आत्मा में विधित्व रूप अप्रकृत की सभावना से अतिव्याप्ति है । )

( सुधा )

तदुक्तिमप्याह—मन्ये इति । तादृश इति । सम्भावनार्थकेवशब्दोऽप्युत्प्रेक्षाव्यञ्जक इत्यर्थः । आदिशब्दार्थमाह—अत्रादीति । दीक्षितोक्तावादिना-अवैमि, ऊहे इत्यादयः प्रकारवि·षादयो गृह्यन्ते इत्यर्थः । उत्प्रेक्षालक्षणं व्याख्याय धर्मसम्बन्धादिति हेतोः फलं दर्शयति—अत्र चेति । उत्प्रेक्षालक्षण इत्यर्थः । कस्तूरिका इति । यदि चेत्पुनरहं ब्रह्मा भवामि, तदा कस्तूरीमृगाणामण्डादखिलं सर्वं गुणं सुगन्धिरूपं दुष्टजिह्वायां निवेशयिष्यामि इत्यन्वयः । अत्रात्मनि विधित्वरूपाप्रकृतस्य संभावनयाऽतिव्याप्तिरित्यर्थः ।

( चित्र० )

यद्यनुष्णो भवेद्वह्निर्यद्यशीतं भवेज्जलम् ।
मन्ये दृढव्रतो रामस्तदा स्यादप्यसत्यवाक् ॥

इत्यादिष्वतिव्याप्तिवारणाय धर्मसम्बन्धादित्युक्तम् । तेषु हि 'यद्यर्थोक्तौ च कल्पनम्' इत्यतिशयोक्त्यलङ्कारविषयेषु, 'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये' इति संभावनालंकारविषयेषु वा निर्निमित्तमेव तथा तथोपतर्कणम् ।

( भारती )

'यदि आग अपने उष्णत्व धर्म छोड कर शीतलता ग्रहण करे और जल अपनी शीतलता छोड कर उष्णता को धारण कर ले तब मैं यह मानता हूँ कि दृढव्रती राम भी असत्यवादी हो सकते हैं ।'

( यहाँ अग्न्यादि में अप्रकृत अनुष्णत्वादि रूप तर्कितत्व से अतिव्याप्ति है । )

उक्त दोनों उदाहरणों में तथाकथित अतिव्याप्ति के निराकरणार्थ लक्षण में धर्मसम्बन्ध से हेतु का उपादान है । दोनों ही जगहों में उपतर्कण का हेतुरहित रहने के कारण अतिव्याप्ति दोप नहीं हुआ । अव प्रश्न उठता है कि तो वहाँ कौन अलङ्कार है ? उत्तर देते हैं कि मम्मट के मतानुसार **'प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम्'** अर्थात् 'वर्ण्य विपय का उससे भिन्न प्रकार से वर्णन किया जाय' इस लक्षण के अनुसर यहाँ अतिशयोक्ति अलङ्कार है । चन्द्रालोकादि

के मत में **'संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धये'** अर्थात् जहाँ किसी कार्य की सिद्धि के विषय में असंभवता का वर्णन किया जाय उसे असमव अलकार कहते हैं। इस लक्षण के अनुसार सभावना अलङ्कार है।

इस प्रकार हेतु के उपादान वताने पर भी उस लक्षण में अतिव्याप्ति की आशका से **'धर्मसम्बन्धात्'** विशेषण की योजना लक्षण में की गयी है।

( सुधा )

**उदाहरणान्तरमाह—यदीति। वह्निरनुष्णो यदि भवेत्, जलमशीतं यदि भवेत्, दृढव्रतो रामस्तदाऽसत्यवागपि स्यादित्यह मन्ये इत्यत्रापि प्रकृतेऽन्यादावप्रकृतानुष्णत्वादेरुपतर्कितत्वादतिव्याप्तिः। तद्वारणाय धर्मसम्बन्धादिति हेतोरुपादानमित्यर्थः। उभयत्राप्युपतर्कणस्य हेतुरहितत्वान्नातिव्याप्तिरिति तद्भावः। तर्हि तत्र को वाऽलङ्कार इत्याशंकां निवर्तयति—तेषु हीत्यादिना। तस्यायं भावः काव्यप्रकाशादिमते तत्रातिशयोक्तिविशेषः, 'यद्यर्थोक्तौ च कल्पनम्' इति तदुक्तलक्षणस्य तत्र सत्त्वात। चन्द्रालोकादिमते तु सम्भावनालङ्कारः 'सम्भावनं यदीत्थं स्यात्' इत्यादेस्तत्राङ्गीकारात्।**

( चित्र० )

तथापि—

सर्वातिशायिसौन्दर्यं शंके सत्यवतो मुखम्।
येन सा मृगशावाक्षी सावित्री तरलीकृता॥

इत्यादिष्वतिव्याप्तिः स्यादिति तद्वारणायान्यधर्मसंबन्धादित्युक्तम्। तत्र सावित्रीहृदयतरलीभावकारकत्वादिना स्वधर्मेणैव वितर्कणमिति नातिव्याप्तिः।

( भारती )

फिर भी—'मैं सत्यवान के मुख में सर्वातिशायि सौन्दर्य की आशका करता हूँ। क्योंकि मृगशावक की आखों की तरह निर्दृष्ट अथ च सुन्दर आखों वाली उस सावित्री का हृदय उसे देखते ही तरल हो उठा।'

उक्त उदाहरण में प्राप्त अतिव्याप्ति दोष के निवारणार्थ ही लक्षण में 'धर्मसम्बन्धात्' विशेषण है। क्योंकि वहाँ सावित्री के हृदय का तरलीकरण स्वधर्म से वितर्कित होने के कारण अतिव्याप्ति नहीं है।

( सुधा )

**हेतोरुपादानेऽपि तल्लक्षणेऽतिव्याप्तिमाशङ्क्य तत्र विशेषणान्तरेण निराकरोति—तथापीति। 'धर्मसम्बन्धात्' इत्युक्तावपीत्यर्थः। सर्वातिशायीति। अहं सत्यवतो मुखं सर्वातिशायिसौन्दर्यं शके, येन मृगशावाक्षी सा सावित्री तरलीकृता इत्यन्वयः। अत्र सावित्रीहृदयतरलीभावकारकत्वरूपमुखधर्मेण मुखे तादृशसौन्दर्योपतर्कणादतिव्याप्तिः स्यात्। अतस्तद्वारणाय हेतावन्येति। तस्याप्रकृतत्वमर्थः। तस्य धर्मस्य मुखसम्बन्धितयाऽप्रकृतधर्मत्वाभावान्नातिव्याप्तिरित्याशयः।**

(चित्र०)

विरक्तसंध्याकपिशं पुरस्ताद्यतो रजः पार्थिवमुज्जिहीते ।
शंके हनूमत्कथितप्रवृत्तिः प्रत्युद्गतो मां भरतः ससैन्यः ॥

इत्यत्रातिव्याप्तिवारणायान्यत्वेनेति विशेषणम् । तत्र ससैन्ये प्रत्युद्गन्तर्यन्यत्रापि दृष्टस्याग्रे रजोगमनस्य सम्बन्धेन निमित्तेन भरतः प्रत्युद्गतत्वेन वस्तुसद्रूपेणैवोपतर्कितो न त्वन्यत्वेनेति नातिव्याप्तिः ।

नरसिंहमहीपाल विदुस्त्वां मकरध्वजम् ।
मार्गणास्तव सञ्जाताः कथं सुमनसोऽन्यथा ॥

इत्यत्राव्याप्तिवारणायोपतर्कितमित्युक्तम् । तत्रानुमानालङ्कारविषये सुमनोमार्गणत्वेन मन्मथत्वव्याप्तिलिङ्गेन राज्ञि मन्मथत्वमवधृतम् न संभावनामात्रम् ।

(भारती)

'अतिरिक्त सन्ध्या की तरह ताम्रवर्ण पृथ्वी के इन उडते धूलिकणों को आगे देखकर, हनुमान के कथनानुसार मैं यह सन्देह करता हूँ कि भरत जी सेना के साथ मुझ से मिलने आ रहे हैं ।'

यहाँ अतिव्याप्ति दोषनिवारण के लिए लक्षण में 'अन्यत्वेन' विशेषण की योजना है । क्योंकि यहाँ भरत के आने की उपतर्कणा में रजोभरण उपगतत्व रूप अन्य धर्म के रहने के कारण प्राप्त अतिव्याप्ति के निवारणार्थ अन्यत्वेन विशेषण से निराकरण किया गया है । ऐसा करने से सेना के साथ आते हुए अन्यत्र उस धर्म के देखने से, उसी निमित्त से भरत का वस्तुसद्रूप के ही द्वारा प्रत्युद्गमन से भरत का तर्कितत्व है न कि अन्य रूप से । अत यहाँ उक्त विशेष के कारण ही अतिव्याप्ति नहीं है ।

'हे पृथ्वीपति नरश्रेष्ठ ! मैं तुम्हें साक्षात् मदन ही मानता हूँ अन्यथा तुम्हारे ये वाण पुष्प निर्मित कैसे होते ?'

अनुमान अलङ्कार के इस उदाहरण में फूलों का वाणत्व से निमित्त होने के कारण राजा में मन्मथत्व वर्ण से अतिव्याप्ति दोष होता है । इसके निवारण के लिए लक्षण में उपतर्कित विशेषण का समावेश किया गया है । ऐसा करने पर फूलों का वाणत्व के हेतु से राजा में मन्मथत्व की अवधारणा है, न कि सभावना मात्र का । अत यहाँ अतिव्याप्ति का निराकरण हुआ ।

(सुधा)

**'अन्यत्वेन' इत्यस्य वैयर्थ्यं निराकरोति—विरक्तेति । विरक्ता अतिरक्ता या सन्ध्या तद्वत्कपिशं ताम्रं पृथिव्या इदं पार्थिवरजः पुरस्तादग्रे यत उज्जिहीते उद्गच्छति, तस्माद्धनुरस्यास्ति हनूमान् 'शरादीनाञ्च' इति दीर्घः । तेन कथिता प्रवृत्तिरस्मदागमनवार्ता यस्य स भरतः ससैन्यस्सन् मां प्रत्युद्गत इत्यहं शंके तर्कयामीत्यन्वयः । अत्र भरते प्रत्युद्गतत्वस्योपतर्कणे रजोभरोद्गमनस्वरूपान्यधर्मसत्त्वतयातिव्याप्तिः स्यात्, अतस्तद्वारणाय—अन्यत्वेनेति । तथा च ससैन्ये प्रत्युद्गन्तरि अन्यत्र तद्धर्मस्य दृष्टत्वेन तेन निमित्तेन भरतस्य वस्तुसद्रूपेणैव प्रत्युद्गतत्वेन भरतस्य तर्कितत्वं न त्वन्यरूपतयेति नातिव्याप्तिः ।**

**'उपतर्कित' इत्यस्य प्रयोजनमाह—प्रकृतमप्रकृतसम्बन्धादन्यत्वेन वर्णितम् उत्प्रेक्षा, इत्युक्ते—हे नरसिंहमहीपाल, त्वां मकरध्वजं कामं विद्मः, अन्यथा मार्गणा बाणाः सुमनसः पुष्पाणि कथं सञ्जाताः? इत्यनुमानालङ्कारे सुमनोमार्गणत्वेन निमित्तत्वेन राज्ञि मन्मथत्ववर्णनादतिव्याप्तिः स्यादत उपतर्कितमिति पदम्। तथा च सुमनोमार्गणत्वहेतुना राज्ञि मन्मथत्वावधारणं न तु सम्भावनामात्रमिति नातिव्याप्तिः।**

## (चित्र०)

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमलता श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥

इत्यत्रातिव्याप्तिवारणाय प्रकृतमित्युक्तम्। तत्र निरतिशयसौन्दर्यसीतावदनादिसंनिधानेन तद्वदनाद्युपमानेष्वपि निकर्षापादकेन प्रशस्तोपमानेष्विन्द्वादिष्वप्रकृतेष्वञ्जनलेपादिनिकर्षसंभावना क्रियत इति नातिव्याप्तिः।

## (भारती)

'सीता के मुख के आगे चन्द्रमा ऐसा लगता है जैसे कालिख से पुता हो, नेत्रों के आगे हिरणियों के नयन ऐसे लगते हैं जैसे जडीभूत हो रहे हों, ओठों की लाली के आगे मूगे के दाने ऐसे लगते हैं जैसे उनकी लाली फीकी पड गयी हो, अङ्गशोभा के आगे सोने की चमक ऐसी लगती है जैसे काली पड गयी हो, मीठी बोली के आगे कोयल की कूक ऐसी लगती है जैसे कर्कशता से भर उठी हो, और केशपाश के आगे मोर के पख ऐसे लगते हैं जैसे किसी भी काम के न हों।'

यहाँ चन्द्रमा आदि में कालिख की पुताई रूप अप्रस्तुत कार्यों की जो सभावना की गयी है उसके द्वारा, उनके कारणभूत, सीता के मुख आदि के सौन्दर्यविशेष की जो कि यहाँ स्पष्ट रूप से प्रतीत है—इस अप्रस्तुत अलकार के उदाहरण में अतिव्याप्ति निवारण के लिए लक्षण में 'प्रकृतम्' विशेषण दिया गया है। ऐसा विशेषण देंने से निरतिशय सौन्दर्यपूर्ण सीता के मुख सधान से अर्थात् अन्य उपमान के निष्कर्षापादक वैसे धर्मों के द्वारा अप्रकृत के प्रशस्त उपमान नेत्रादि में अजन लेपनादि निष्कर्प की सभावना से प्रकृत में उसका अभाव है। फलत यहाँ अतिव्याप्ति दोष नहीं होता है।

## (सुधा)

प्रकृतपदस्य फलं निरूपयति—इन्दुरिति। सीतायाः पुरतोऽञ्जनेन इन्दुर्लिप्त इव, मृगीणां जडितेव दृष्टिः विद्रुमलता प्रम्लानारुणिमा इव, हेमप्रभा श्यामेव, कोकिलवधूकण्ठेषु कलया प्रस्तुतं कार्कश्यमिव, हन्त! शिखिनां मयूराणां बर्हाः सगर्हा इव भवन्तीत्यन्वयः। अत्र निरतिशयसौन्दर्य सीतावदनसान्निध्यनिमित्तेनेन्द्वादिष्वञ्जनलेपनादितर्कणस्य सत्त्वात् अप्रस्तुतप्रशंसायामतिव्याप्तिस्स्यात्। अतस्तद्वारणाय प्रकृतमित्युक्तम्। तथा चोपमानान्तरनिष्कर्षापादकतादृशधर्मेणाप्रकृतेषु प्रशस्तोपमानचन्द्रादिष्वञ्जनलेपनादिनिष्कर्षस्य सम्भावनतया प्रकृते तदभावान्नातिव्याप्तिः।

( चित्र० )

नन्वेवमपि—

अस्मद्विक्रमचेष्टितानि निखिलत्रैलोक्यहेलाजय-
प्रह्वीभूतसुरासुराणि भवतो भूमेः सुता शृण्वती ।
पत्यौ द्वेषकषायितेन मनसा स्निग्धा मयि स्थास्यति
स्त्रीणां प्रेम यदुत्तरोत्तरगुणग्रामस्पृहाचञ्चलम् ॥

इत्यत्र चाञ्चल्यसहचरितत्वेनान्यत्र दृष्टस्त्रीत्वस्य सबन्धेन निमित्तेन वस्तुतः प्रत्येकस्थिरचित्ता देवी सीता चञ्चलत्वेनोपतर्किता । न च तत्रोत्प्रेक्षालङ्कारः, रावणकृततदीप्सितसंघटनानुकूलविचारमात्रस्य निबद्धत्वेन विच्छित्तिविशेषाभावात् । न चान्यधर्मसंबन्धादित्यत्र धर्म उपमायामिव सहृदयहृदयाह्लादो विवक्षितः, न तु साधारणधर्ममात्रम् । तथा च नोक्तातिव्याप्तिः । स्त्रीत्वादेश्चाञ्चल्यादिसंभावनामात्रप्रयोजकत्वेऽपि सहृदयहृदयाह्लादिसाधारणधर्माभावेनोपमालंकारप्रयोजकत्वाभावादिति वाच्यम् ।

( भारती )

'निखिल त्रैलोक्य की विजय के कारण नम्रीभूत देव और दानवों पर मेरे पराक्रमों की चर्चा आप से सुनती हुई, भूमिसुता जानकी, जिसका हृदय, उसके पति के साथ मेरा द्वेष रहने के कारण कषायित है, मन से मुझ पर स्नेह करेगी । क्योंकि स्त्रियों का प्रेम उत्तरोत्तर गुण-समूह की स्पृहा में चचल होता है ।'

इसी प्रकार—चचल चरित्र के कारण दूसरी जगह देखी गयी स्त्री के सम्बन्ध से यहाँ प्रकृत अर्थात् स्थिरचित्त सीता में दूसरे की चचलता आदि की उपतर्कणा से अतिव्याप्ति है । अगर यहाँ उत्प्रेक्षालङ्कार ही मान लें, तो अपनी ईप्सित घटना के अनुकूल रावण के विचारमात्र के वर्णन में चमत्कार के अभाव से अन्य समाधान की आशका कर, निराकरण करते हैं कि अप्रकृत धर्म-सम्बन्ध से यहाँ धर्म शब्द का साधारण धर्म की विवक्षा है । किन्तु, उपमा में सहृदय-हृदय आह्लादक धर्म है । ऐसा करने से स्त्रीत्वादि का उसकी सभावना के प्रयोजकत्व में भी सहृदय हृदय के अह्लादकत्व के अभाव से यहाँ अलङ्कार के प्रयोजकत्वाभाव से अतिव्याप्ति नहीं है ।

( सुधा )

दोषान्तरमाशङ्क्य निराकरोति—नन्विति । एवमपि 'प्रकृतस्याप्रकृतधर्मसम्बन्धादन्यत्वेन सम्भावनम्' इत्युक्तलक्षणेऽपीत्यर्थः ।

अस्मादिति । निखिलस्य सकलस्य त्रैलोक्यस्य हेलाजये नम्रीभूताः सुरासुरा येषु तानि अस्माकं विक्रमचेष्टितानि भवतः शृण्वती भूमेः सुता सीता रामे द्वेषकषायितेन मनसा मयि स्निग्धा स्नेहवती स्थास्यति । यत् स्त्रीणां प्रेम उत्तरोत्तरगुणसमूहे स्पृहाचञ्चलं भवति । अत्र चाञ्चल्यचरितत्वेनान्यत्र दृष्टस्त्रीत्वसम्बन्धेन स्थिरचित्तसीतायां प्रकृतायामन्यस्य चञ्चलत्वादेरुपतर्कणादतिव्याप्तिः स्यात् । तस्य लक्ष्यत्वं निराकरोति—न चेति । लक्ष्यत्वाभावे हेतुमाह—रावणकृतेति । स्वेप्सितसङ्घटनानुकूलरावणविचारमात्रस्य वर्णने चमत्काराभावात् समाधानान्तरमाशङ्क्य निराकरोति—न चेति । अप्रकृतधर्मसम्बन्धा-

**दित्यत्र धर्मशब्दस्य न साधारणधर्ममात्रे, किन्तूपमायामिव सहृदयहृदयाह्लादिनि धर्मे। तथा च स्त्रीत्वादेः तत्सम्भावनाप्रयोजकत्वेऽपि सहृदयहृदयाह्लादित्वाभावेनालङ्कारप्रयोजकत्वाभावान्नातिव्याप्तिः।**

( चित्र० )

तथापि—

स्तनाभिरामस्तबकां नून सीतेति वल्लरीम्।
संभावयन् रघुपतिर्धावति स्म दिदृक्षया॥

इत्यत्रातिव्याप्तेरवारणात्। न चाहार्यत्वं तर्कविशेषणम्। इह त्वनाहार्या संभावनेति वाच्यम्, तथा सति 'शंके हनूमत्कथितप्रवृत्तिः' इति संभावनाया अप्यनाहार्यत्वेन तद्व्यावृत्त्यर्थस्यान्यत्वेनेत्यस्य वैयर्थ्यप्रसङ्गादिति चेत्; मैवम्। अन्यत्वेनेत्यस्यान्यत्वेनावगतपरतया तस्यैवाहार्यत्वविशेषणपर्यवसायित्वात्।

( भारती )

फिर भी—

'स्तनों की तरह अभिराम गुच्छावाली, लतावल्लरी में सीता की सभावना करते हुए—रघुपति राम उसे देखने की इच्छा से दौडते थे।'

यहाँ अभिरामत्वधर्म से वल्लरी में सीता की सभावना से अतिव्याप्ति है। अगर आप कहें कि सभावना में आहार्यत्व के विशेषण से सीताविषयक सभावना में आहार्यत्व से अतिव्याप्ति नहीं है, तो ऐसा कहने से सभावना में आहार्यत्व विशेषण देने पर—

**'विरक्ते संध्याकपिश पुरस्तादेतद्रज· पार्थिवमुज्जिहीते।**
**प्रत्युद्गतो मां भरत· ससैन्य······'।** ( इस श्लोक की व्याख्या हो चुकी है )

इस श्लोक के प्रत्युद्गमन का अन्यत्र रहने के कारण आहार्यसभावना से उस अतिव्याप्ति की निवृत्ति होने पर भी 'अन्यत्वेन' विशेषण की व्यर्थत्वापत्ति होगी। समाधान करते हुए कहते हैं कि इसीलिए 'अन्यत्वेन' यहाँ ही आहार्यत्व की विशेषणीयता है न कि सभावना की। क्योंकि उसका 'अन्यत्वेन' के साथ अवगतपरता है। ऐसा करने से चञ्चलत्व और सीतात्व का आहार्यत्वाभाव से अतिव्याप्ति नहीं होती है।

( सुधा )

**तथापीति। धर्मे सहृदयहृदयाह्लादित्वविवक्षणादतिव्याप्तिनिवारणेऽपीत्यर्थः। रघुपती रामो नूनं वल्लरीं स्तनाभिरामस्तवकवर्तीं सीतेति सम्भावयन्, दिदृक्षया धावति स्मेत्यन्वयः। अत्राभिरामत्वधर्मेण वल्ल्यां सीताया· सम्भावनसत्त्वादतिव्याप्तिः। समाधानमाशङ्क्य निराकरोति—न चेति। सम्भावनायामाहार्यत्वस्य विशेषणात् सीताविषयकसंभावनायामाहार्यत्वाभावान्नातिव्याप्तिरित्यर्थः—तथा सतीति। सम्भावनायामाहार्यत्वविशेषणदाने सतीत्यर्थः। 'विरक्तेसन्ध्याकपिशं पुरस्तादेतद्व्रजः पार्थिवमुज्जिहीते। प्रत्युद्गतो मां भरतः ससैन्य॥' इति श्लोकशेषः। अत्र प्रत्युद्गमनस्यान्यत्र सत्त्वतयाऽऽहार्यसम्भावनाभावेन तदतिव्याप्तिनिवृत्तावन्यत्वेनेत्यस्य व्यर्थत्वापत्तेरित्याशङ्कार्थः। समाधत्ते—मैवमिति।**

अन्यत्वेनेत्यत्रैवाहार्यत्वस्य विशेषणीयत्वं न तु सम्भावनायाः, तस्यान्यत्वेनावगतपरत्वात्। तथा च चञ्चलत्वस्य सीतात्वस्य चाहार्यत्वाभावान्नातिव्याप्तिरिति समाधानार्थः ।

( चित्र० )

ननु तथापि नैतल्लक्षणम् , अव्याप्तेः । तथा हि यत्र स्वमात्रधर्माद‌न्यमात्रधर्माद्वा किञ्चिदुत्प्रेक्ष्यते तत्रान्यधर्मसंबन्धादिति लक्षणांशाभावादव्याप्तिः ।

यथा—

अङ्गुलीभिरिव केशसञ्चयं संनियम्य तिमिरं मरीचिभिः ।
कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥

भूयस्तराणि यदमूनि तमस्विनीषु
ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः ।
संध्यानलेन भृशमम्बरमूषिकाया-
मावर्तितैरुडुभिरेव कृतोऽयमिन्दुः ॥

( भारती )

'ननु' से पुन आशका करते हैं—तथापि अर्थात् फिर भी प्रकृत का अप्रकृतधर्मसम्बन्ध से आहार्यत्वावगत के द्वारा वैसा लक्षण करने पर भी सभावना है ही। यह लक्षण भी अतिव्याप्ति दोष से दूषित रहने के कारण प्रतिपादन के योग्य नहीं है। यहाँ अव्याप्तिप्रतिपादन के लिए हेतु में विकल्प बताते हैं। वैसा करने पर—जहाँ स्वमात्र धर्म से कुछ उत्प्रेक्षण है अथवा जहाँ अन्यमात्र धर्म से ही कुछ उत्प्रेक्षण है—दोनों ही स्थिति में हेतु के अभाव से व्याप्ति होती है। दोनों को अलग-अलग उदाहरण देकर बताते हैं। जैसे—

'चन्द्रमा अङ्गुलियों की तरह किरणों से केश-सञ्चय की तरह अन्धकार को पकड कर, मुकुलित कमलरूपी आखोंवाली रातरूपी नायिका का मुख चूम रहा है।'

'ये तारे अन्धकाराच्छन्न रात में अविरलभाव से उपस्थित हैं। हमारी ऐसी प्रतीत है कि चन्द्रमाने इन नक्षत्रों को सन्ध्यारूपी आग से आकाशरूपी मूषिका ( सोना गलाने की घरिया ) में आवर्त्तित कर दिया है।'

( सुधा )

आशङ्कते—नन्विति । तथापीति प्रकृतस्याप्रकृतधर्मसम्बन्धादाहार्यान्यत्वावगतेन सम्भावितस्य तल्लक्षणत्वेऽपीत्यर्थः। एतल्लक्षणस्याव्याप्तिदूषितत्वात् प्रतिपादनमशक्यमित्यर्थः। अव्याप्तिं प्रतिपादयितुं हेतौ विकल्पमाह—तथा हीति। यत्र स्वमात्रधर्माद्युत्प्रेक्षण यत्र चान्यमात्रधर्माद्वा, तदुभयोर्हेत्वभावादव्याप्ति स्यादिति भावः। तदुभयं दर्शयति-अङ्गुलीभिरित्यादिना। शशी चन्द्रः, अङ्गुलीभिरिव मरीचिभिः केशसञ्चयमिव तिमिरं सन्निगृह्य मुकुलितकमललोचनं रात्रिमुखं चुम्बतीवेत्यन्वयः। भूय इति। अमूनि उडूनि तमस्विनीषु यद्भूयस्तराणि ज्यौत्स्नीषु च प्रविरलानि सन्ति, ततस्सन्ध्याग्निना आकाशमूषिकायामावर्तितैर्नक्षत्रैरेवायं चन्द्रः, कृत इति वयं प्रतीम इत्यन्वयः।

( चित्र० )

इत्यत्राद्योदाहरणेऽङ्गुलीसदृशीभिर्मरीचिभिः केशसञ्चयसदृशस्य तिमि-

रस्य ग्रहणात् स्वमात्रधर्मादेव शशिनश्चुम्बनमुत्प्रेक्षितम् । द्वितीये ताराविरलत्वाविरलत्वरूपेणान्यमात्रधर्मेण चन्द्रस्य सध्यानलमध्यगाम्बरमूषिकावर्तिततारानिकरनिमित्तत्वमुत्प्रेक्षितम् ।

किं च हेतुफलधर्मस्वरूपोत्प्रेक्षास्वन्यत्वेनेति लक्षणांशाभावादव्याप्तिः । यथा—

सैषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥

( भारती )

इन दोनों उदाहरणों के बीच प्रथम उदाहरण में अङ्गुली की तरह किरणों के द्वारा केश-संग्रह के सदृश अन्धकार के ग्रहण से स्वधर्ममात्र से चद्रमा का मुखचुम्बन ही उत्प्रेक्षा है, नकि अन्य मात्र-धर्म सम्बन्ध से । अत यहाँ अव्याप्ति है । दूसरे में, तारों के विरलत्व और अविरलत्व से अन्य धर्ममात्र से चन्द्रमा का सध्या—अग्नि के बीच आकाशमूषिकावर्त्तित ताराओं के समूह से निर्मितत्व का उत्प्रेक्षण है । यहाँ चन्द्रमा में उसके धर्मसम्बन्ध के अभाव से अव्याप्ति है । यहाँ धर्म का दोनों वृत्ति में नियम है ।

किञ्च से लक्षण में अन्य दोष बताते हैं । 'अन्यत्वेन' विशेषण का हेतु फलधर्मस्वरूप उत्प्रेक्षा के स्वभाव से वहाँ अव्याप्ति है । जैसे—

'यह वही वनभूमि है, जहाँ तुमको ढूढते हुए मैंने भूमिपर नूपुर को पाया था, जो मानो तुम्हारे चरण-कमल के विरहजन्य दु ख से मौन दिखलाई पडता था ।'

( सुधा )

**प्रथमेऽव्याप्तिमाह—आद्योदाहरण इति । अङ्गुलीसदृशमरीचिकृतकेशसङ्ग्रहसदृशतिमिरग्रहणेन स्वभावधर्मेण चन्द्रस्य मुखचुम्बनोत्प्रेक्षणं न त्वन्यमात्रधर्मसम्बन्धादित्यव्याप्तिः । द्वितीये—ताराविरलत्वाविरलत्वरूपेणान्यमात्रधर्मेण चन्द्रस्य सन्ध्यानलमध्यगाम्बरमूषिकावर्तिततारानिकरनिर्मितत्वस्योत्प्रेक्षणम् । अत्र चन्द्रे तद्धर्मसम्बन्धाभावादव्याप्तिः धर्मस्योभयवृत्तित्वनियमसत्त्वादिति भावः । लक्षणे दूषणान्तरमाह—किञ्चेति । अन्यत्वेनेत्यस्य हेतुफलधर्मस्वरूपोत्प्रेक्षास्वभावात् तत्राव्याप्तिरित्यर्थः । तत्र हेतूत्प्रेक्षायामव्याप्तिमाह—यथेति । सा पूर्वानुभूता स्थली एषा दृश्यत इत्यर्थः । यत्र स्थल्यां त्वां विचिन्वताऽन्विष्यता मया, त्वच्चरणारविन्देन यो विश्लेषो वियोगस्तेन दुःखं तस्मादिव बद्धमौनं निःशब्दमुर्व्यां भ्रष्टमेकं नूपुरं मञ्जीरः 'मञ्जीरो नूपुरोऽस्त्रियाम्' इत्यमरः । अदृश्यतेत्यन्वयः ।**

( चित्र० )

इति हेतूत्प्रेक्षोदाहरणे नूपुरगतेन दुःखिसाधारणेन मौनित्वेन निमित्तेन नूपुरे तद्धेतुभूतदुःखमेव धर्मतयोत्प्रेक्ष्यते, न तु दुःखितादात्म्यम् , दुःखशब्दस्योपरि मतुबाद्यश्रवणात् । एवम्—

चोलस्य यद्भीतिपलायितस्य भालत्वचं कण्टकिनो वनान्ताः ।
अद्यापि किं वानुभविष्यतीति व्यपाटयन् द्रष्टुमिवाक्षराणि ॥

इति फलोत्प्रेक्षोदाहरणे द्रुमगतेन ललाटाक्षरदर्शनप्रवृत्तपुरुषसाधारणेन

ललाटपाटनेन निमित्तेन द्रुमाणां तत्फलं ललाटाक्षरदर्शनमुद्देश्यमिति धर्मतयो-त्प्रेक्ष्यते न तु ललाटाक्षरदर्शनप्रवृत्तधर्मितादात्म्यम् , द्रष्टुमित्यस्य धर्मि-पर्यन्ताभावात् ।

तथा—

पिनष्टीव तरङ्गाग्रैः समुद्रः फेनचन्दनम् ।
तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥

(भारती)

यहाँ नूपुरगत दु ख साधारण मौनित्वधर्म से नूपुर में धर्मता से उसके हेतुभूत दु ख का ही उत्प्रेक्षण है, न कि अन्य का। अत. हेतूत्प्रेक्षा के इस उदाहरण में अतिव्याप्ति है। दु खी का तादात्म्य सम्बन्ध से तो यहाँ उत्प्रेक्षा नहीं है। अत. आगे मतुप् आदि का श्रवणाभाव से वहाँ उसकी उपेक्षा है। इसी प्रकार फलोत्प्रेक्षा की अव्याप्ति बताते हैं। जैसे—

इस श्लोक में राजा नृसिंहदेव का वर्णन है—'जिसके भय से भागे हुए चोल नरेश के ललाट की त्वचा को कटीले वन प्रदेशों ने, अब भी 'न जाने यह क्या अनुभव करेगा' इस कारण से, मानो विधाता की लिपि देखने के लिए, उधेड डाला है।'

फलोत्प्रेक्षा के इस उदाहरण में कँटीले वनप्रदेशरूपी विषय में न केवल 'ललाट की चमडी उधेडना' जिसका निमित्त है उस 'विधाता की लिपि देखने' की उत्प्रेक्षा यहाँ की जा रही है। किन्तु, वह 'लिपि देखना' जिसका फल है उस 'ललाट की त्वचा उधेडने' आदि विषयी की काँटो द्वारा किये गये 'उधेडने' आदि विषय में अभेद सम्बन्ध द्वारा उत्प्रेक्षा की जा रही है। तात्पर्य यह कि इस पद्य में 'कँटीले वनप्रदेश' उत्प्रेक्षा का विषय और 'विधाता की लिपि देखना' विषयी नहीं है किन्तु, 'काँटों द्वारा किये गये उधेडना' विषय और 'अक्षर देखना जिसका फल है वह ललाट की चमडी उधेडना' विषयी है।

निष्कर्ष यह है कि—विषयी की उत्प्रेक्षा सर्वत्र धर्मोत्प्रेक्षाओं में और हेतूत्प्रेक्षा तथा फलो-त्प्रेक्षा में भी अभेद सम्बन्ध से ही होती है।

'तथा' शब्द से धर्मस्वरूप उत्प्रेक्षा के उदाहरण में अव्याप्ति बतलाते हैं। जैसे—

'समुद्रतरङ्गों के अग्रभाग से फेनरूपी चन्दन को घिसते हुए की तरह चन्द्रमा ने मानो उस फेनरूपी चन्दन को लेकर किरणरूपी हाथों से दिशावधू के शरीर में लेप कर दिया है।

(सुधा)

अत्र नूपुरगतदुःखिसाधारणमौनित्वधर्मेण नूपुरे धर्मतया तद्धेतुभूतदुःखस्यैवोत्प्रेक्षणं नत्वन्यस्येनेत्यव्याप्तिः। दुःखिनस्तु तादात्म्य नोत्प्रेक्ष्यते, ततोऽग्रे मतुबादेः श्रवणाभावात्, तत्र तस्यापेक्षणाच्च। फलोत्प्रेक्षायामव्याप्तिमाह—चोलस्येति। कण्टकवन्तो वृक्षा भीति-पलायितस्य चोलस्य यल्ललाटत्वचं व्यपाटयन् तदद्यापि किं वानुभविष्यति इत्यक्षराणि द्रष्टुमिवेत्यन्वयः। अत्र फलोत्प्रेक्षोदाहरणे द्रुमगततद्दर्शनप्रवृत्तपुरुषसाधारणललाटपाटन-निमित्तेन तत्फलललाटाक्षरदर्शनस्य वृक्षोद्देश्यत्वेन तद्दर्शनफलकत्वग्विपाटनमेव धर्मभावे-नोत्प्रेक्ष्यते। तथा चात्रापि तदन्यतयोत्प्रेक्षणाभावादव्याप्तिः। अत्र तद्दर्शनप्रवृत्तधर्मिणस्तु तादात्म्यं नोत्प्रेक्ष्यम्, द्रष्टुमित्यस्य तत्पर्यन्तत्वाभावात्, त्वग्विपाटनफल एवान्वयसौ-कर्यादित्यर्थः। धर्मस्वरूपोत्प्रेक्षोदाहरणेऽव्याप्तिमाह—तथेति। समुद्रः तरङ्गाणामग्रभागैः

**फेनरूपं चन्दनं पिनष्टीव, इन्दुस्तत् फेनचन्दनमादाय करैः दिग्रूपा अङ्गना लिम्पतीवेत्यन्वयः ।**

( चिन्द्र० )

इति धर्मस्वरूपोत्प्रेक्षोदाहरणे समुद्रस्य चन्दनघर्षणशिलाप्रान्तस्थानीये तटे हस्तस्थानीयतरङ्गाग्रैः फेनचन्दनपेषकत्वेन शशाङ्कस्य करैर्दिगङ्गनादिधवलीकरणेन च प्रतीयमानेन निमित्तेन तत्कर्तृकं पेषणलेपनमात्रमुत्प्रेक्ष्यते, न तु तयोः पेषणलेपनकर्तृतादात्म्यम् । पिनष्टि लिम्पतीत्याख्यातयोः कर्तृवाचकत्वेऽपि 'भावप्रधानमाख्यातम्' इति न्यायेन कर्तुः प्रधानभूतक्रियोपसर्जनस्यान्यत्रान्वयासंभवात् । अत एव 'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जन नभः' इत्युत्प्रेक्षामुदाहृतवता दण्डिनोक्तोदाहरणयोरिवशब्दश्रवणाल्लेपनवर्षणकर्तृभ्यां तमोनभसोरुपमामाशङ्क्य—

( भारती )

इस उदाहरण में चन्दन घिसने के लिए शिलाप्रान्त स्थानीय किनारे में, समुद्र के हाथ के स्थान में तरङ्गों के अग्रभाग से फेनरूपी चन्दन के पेषकत्व से, और चन्दन का दिग्वधू के धवलीकरण से—प्रतीयमान दोनों निमित्तों के द्वारा तत्कर्तृक पेषण और लेपन मात्र की उत्प्रेक्षा से तथा उससे भिन्न तर्कणाभाव के कारण अव्याप्ति है। अगर आप यह कहें कि दोनों वाच्यों से ही पेषणत्व और लेपनत्व क्रिया से तत्कर्तृक तादात्म्य की उत्प्रेक्षा से अन्यत्व के द्वारा यहाँ सभावना है ही, तो इसका यह उत्तर है कि 'पिनष्टि' इत्यादि क्रिया का कर्तृवाचकत्व होने पर भी, **'भावप्रधानमाख्यातम्' 'सत्त्वप्रधानानि नामानि'** इस क्रियारूप धातु के अर्थ में विशेषणीभूत तिङर्थ के कर्त्ता की सम्भावना में अन्वय असम्भव है।

निष्कर्ष - यहाँ **'भावप्रधानमाख्यातम्'** से वाक्य-विरोध होगा, क्योंकि आख्यात में व्यापार प्रधान होता है, जब कि यहाँ प्रथमात पद प्रधान है। यह कुछ नहीं है। **'भावप्रधानमाख्यातम्'** का अर्थ 'आख्यात' का 'प्रधान' 'भाव' होता है। यहाँ आख्यात का अर्थ तिङ् प्रत्यय, प्रधान का वाच्य एव भाव का व्यापार करने पर उपर्युक्त बात की पुष्टि हो जाती है। अब प्रश्न यह उठता है कि 'प्रधान' का यहाँ 'वाच्य' अर्थ कैसे हुआ ? इसके अगले वाक्य **'सत्त्वप्रधानानि नामानि'** का अर्थ 'प्रातिपदिक द्रव्यवाची होते हैं, में 'प्रधान' का अर्थ 'वाच्य' ही है। अत- उपर्युक्त अर्थ किया गया है।

और भी-अन्य विशेषण का दूसरी जगह अन्वय की अयोग्यता भी है। इसीलिए इस उदाहरण में—

**लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।**
**असत् पुरुषसेवेव दृष्टिर्विफलतां गता॥**

'ऐसा प्रतीत हो रहा है कि जैसे अधेरा अग-अग में लेप रहा हो, आकाश का जल बरसा रहा हो और आँखें दुष्ट सेवा की भाँति व्यर्थ हो गयी हो।'

यहाँ दो अनुक्तविषया वस्तूत्प्रेक्षाएँ हैं। यहाँ पर अन्धकार का बिना वर्णन किये ही काजल की वर्षा तथा अन्धेरा के लेपन कार्य के रूप में सभावना का कथन किया गया है। अत- यहाँ उत्प्रेक्षा का विषय है रात्रि का अन्धकार, जो अनुक्त है।

**विमर्श—'लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः'** अर्थात् अन्धकार मानो अगों को काले रग से पोत रहा है, आकाश मानो काजल बरसा रहा है। इस पद्य में प्रथमात कर्त्ता अधकार और आकाश में क्रमश. 'पोतना' और 'बरसना' क्रियाओं के कर्त्ता होने की उत्प्रेक्षा नहीं है। इसका कारण यह है कि इसमें कर्तृत्व आख्यात के अर्थ का विशेषण है, जिसके फलस्वरूप यह वाक्य के प्रधान अश की अपेक्षा एकदेश है। इसलिए मुख्य न होने से 'कर्तृत्व' की उत्प्रेक्षा नहीं कही जा सकती। तथा 'पोतने', 'अधकार' आदि में कर्त्ता के अभेद सम्बन्ध होने से यहाँ उत्प्रेक्षा ही है। क्योंकि (कर्त्ता) में क्रिया के विशेषण होने के कारण प्रधानत्व की कमी है। किन्तु यहाँ 'अन्धकार', 'अग' एव 'पोतने' रूपी क्रमश कर्त्ता, कर्म और क्रिया की उत्प्रेक्षा 'आकाश', 'काजल' एव 'बरसने' इत्यादि में हो रही है। इन दोनों उत्प्रेक्षित—पोतने और बरसने के द्वारा इस उत्प्रेक्षा का विषय 'व्याप्त होना' निगीर्ण कर लिया गया है। फलत. 'व्याप्त होने' का उल्लेख यहाँ नहीं किया गया है। इस प्रकार के व्यवहृत उत्प्रेक्षा को अनुपात्तविषया उत्प्रेक्षा कहते हैं। अपने निमित्त धर्म 'काले कर डालना' के कारण वह अनुपात्त है।

यहाँ अन्धकार के व्यापनादि और लेपनादि रूप से सभावना के कारण उत्प्रेक्षा के रूप में इसे उदाहृत करते हुए दण्डी ने लेपन-वर्षणकर्तृक अन्धकार और नभ के शब्दश्रवण से उपमा की तरह आशङ्का कर कहा है—

(सुधा)

**अत्रोदाहरणे चन्दनवर्षणशिलाप्रान्तस्थानीयतटे समुद्रस्य हस्तस्थानीयतरङ्गाग्रैः फेन-चन्दनपेषकत्वेन चन्दनस्य दिगङ्गनाधवलीकरणेन चेत्येवं प्रतीयमानाभ्यां द्वाभ्यां निमित्ताभ्यां तत्कर्तृकपेषणलेपनमात्रोत्प्रेक्षणेन तदन्यतयोपतर्क्षणाभावादव्याप्तिः। न च वाच्याभ्यामेव पेषणत्वलेपनत्वाभ्यां तत्कर्तृकतादात्म्यस्योत्प्रेक्षणीयतयाऽन्यत्वेन सम्भावनमस्त्येवेति वाच्यम्, पिनष्टीत्यादेराख्यातस्य कर्तृवाचकत्वेऽपि 'भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानि' इति क्रियारूपधात्वर्थे विशेषणीभूततिङर्थस्य कर्तुः सम्भावनायामन्वयासम्भवात्। अन्यविशेषणस्यान्यत्रान्वयायोगाच्च। अत्र दण्डिमतप्रमाणमुपन्यस्यति—अत एवेति। तमोऽङ्गानि लिम्पतीव, नभोऽञ्जनं वर्षतीव। अत्र तमसो व्यापनादेर्लेपनादिरूपतया सम्भावितत्वादुत्प्रेक्षमुदाहृतवता दण्डिना लेपनवर्षणकर्तृभ्यां तमोनभसोरुपमास्विव शब्दश्रवणादाशङ्क्य—**

(चित्र०)

कर्ता यद्युपमानं स्यान्न्यग्भूतोऽसौ क्रियापदे।
स्वक्रियासाधने व्यग्रो नालमन्यदपेक्षितुम्॥

इति दूषितम्।

वृत्तानुपूर्वे च न चातिदीर्घे जङ्घे शुभे सृष्टवतस्तदीये।
शेषाङ्गनिर्माणविधौ विधातुर्लावण्य उत्पाद्य इवास यत्नः॥

इत्यत्र निरतिशयलावण्यशालिजङ्घासृष्ट्यनुमितेन निःशेषलावण्यकोशव्ययेन निमित्तेन विधातुः शेषाङ्गनिर्माणोपयुक्तलावण्योत्पादने यत्नमात्रमुत्प्रेक्ष्यते, न तु तथाभूतयत्नवत्तादात्म्यमिति स्पष्टमेव।

अपि चाप्रकृतधर्मिकोत्प्रेक्षायां प्रकृतमित्यंशाभावादव्याप्तिः। यथा—

हृतसारसिवेन्दुमण्डलं दमयन्तीवदनाय वेधसा।
कृतमध्यबिल विलोक्यते धृतगम्भीरखनीखनीलिम॥

( भारती )

अर्थात् यदि उपमान ही कर्त्ता हो, तब क्रिया पद में विशेषणीभूत यह अपनी क्रिया की साधनव्यग्रता से अन्वय अर्थात् सादृश्यान्वय की अपेक्षा के लिए समर्थ नहीं होती है।' इससे समाधान करते हुए दूषित कहा है।

'विधाता को पार्वती के शरीर-निर्माण के लिए, एकत्रीकृत सम्पूर्ण सौन्दर्य-द्रव्यों का व्यय, केवल उसके दोनों सुन्दर जघाओं के निर्माण में ही हो गया। अब शरीर के अन्य अवयवों के निर्माण के लिए उन्हें अतिरिक्त लावण्य द्रव्यों का प्रयत्नपूर्वक सग्रह करना पडा।'

यहाँ अत्यन्त सौन्दर्यशाली जघाओं के निर्माण में सम्पूर्ण लावण्यकोश के व्यय हो जाने के निमित्त से विधाता का पार्वती के शेष अङ्गनिर्माणोपयुक्त लावण्य के उत्पादन में प्रयत्नमात्र की उत्प्रेक्षा है नकि तथाभूत यत्न की तरह तादात्म्य की उत्प्रेक्षा है।

और भी 'प्रकृत' का कथन भी यहाँ उचित नहीं है। क्योंकि अप्रकृतधर्मिका उत्प्रेक्षा में उसके अभाव से अव्याप्ति है। जैसे—

'दमयन्ती के मुख का निर्माण करते समय विधाता ने चन्द्रमा के बीच से सौन्दर्यरूपी सार भाग ले लिया। फलत चन्द्रमा के बीच में ही छिद्र हो गया। आज भी चन्द्रमा के बीच के उस छेद से होकर उस पार के आकाश की नीलिमा साफ-साफ दिखाई दे रही है।'

( सुधा )

यद्युपमानं कर्ता स्यात्, तदा क्रियापदे विशेषणीभूतोऽसौ स्वक्रियासाधनव्यग्रत्वाद्-न्यत्=सादृश्यान्वयमपेक्षितुं समर्थो न भवतीत्यादिना समाहितम्। किञ्च, वृत्तेवर्तुले पूर्वमनुगते अनुपूर्वे, गोपुच्छाकार इत्यर्थः।

वृत्ते च ते अनुपूर्वे च वृत्तानुपूर्वे, नातिदीर्घे च, महाविभाषया समासाभावः। शुभे मङ्गले, तस्या इमे तदीये जङ्घे, सृष्टवतो निर्मितवतो विधातुः स्रष्टुः शेषाङ्गनिर्माण-विधौ विषये जङ्घातिरिक्तावयवनिर्माणार्थम्, उत्पाद्ये पुनः सम्पाद्ये लावण्ये कान्ति-विशेषविषये सयत्न इव आसेत्यन्वयः। अत्राप्युदाहरणे निरतिशयलावण्यशालिजङ्घासृ-ष्ट्यनुमितनिश्शेषलावण्यव्ययात्मकधर्मसम्बन्धेन विधातुः शेषाङ्गनिर्माणोपयोगिलावण्यो-त्पादनयत्नमात्रस्योत्प्रेक्षणं न तु यत्नवत्तादात्म्योत्प्रेक्षा। तथा च तद्यत्नस्यापि तद्धर्मतोऽ-न्यत्वाभावादव्याप्तेश्च। दूषणान्तरं लक्षणे पुनः प्रतिपादयति—अपि चेति। प्रकृतमित्य-स्यापि कथनं न युज्यते, अप्रकृतधर्मिकोत्प्रेक्षायां तस्याभावात्। तदेवाह—यथेति। इन्दुमण्डलं चन्द्रबिम्ब वेधसा ब्रह्मणा दमयन्तीवदनाय तन्निर्मातुं हृतसारमिव गृहीतश्रेष्ठ-भागमिव, कृतं मध्ये बिलं छिद्रं यस्य धृतो गम्भीरखन्यां निम्नगर्ते उपरिस्थस्य खस्या-काशस्य नीलिमा येन तादृशं विलोक्यते दृश्यते तर्क्यते इति यावदित्यन्वयः।

( चित्र० )

अत्र कृतमध्यबिलमिति पदार्थहेतुककाव्यलिङ्गापेक्षयातिशयोक्त्या कृत-मध्यरन्ध्राकाशनैल्यत्वेनाध्यवसितो यः कलङ्कस्तद्रूपत्वेन निमित्तेन कलङ्काध्य-

वसितधृतमध्यरन्ध्राकाशनैल्यन्वनिमित्तोत्प्रेक्षितं कृतमध्यबिलत्वेन निमित्तेन वा चन्द्रमण्डल दमयन्तीवदननिर्माणाय हृतसारत्वेनोत्प्रेक्षितम्, न तु प्रकृतं दमयन्तीवदनमेवोक्तप्रकाराहृतैन्दवसारांशनिर्मितत्वेनोत्प्रेक्षितम्।

यद्बालेन्दुकलोच्चयादुपचितैः सारैरिवोत्पादितम्।
तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम्॥'

इत्यत्रेव तथाशब्दान्वयाभावात्।

(भारती)

इस उदाहरण में कलङ्क के निमित्त से अथवा बीच में छेद के निमित्त से चन्द्रमण्डल का दमयन्ती के मुख-निर्माण के लिए 'हृतसारत्व' की उत्प्रेक्षा है नकि प्रकृत दमयन्ती वदन की उक्त प्रकार से आहृत चन्द्रमा के साराशत्व से उत्प्रेक्षा है। अत. यहाँ प्रकृत का उत्प्रेक्षणाभाव के कारण अप्रकृत चन्दमण्डल की उत्प्रेक्षा से ही अव्याप्ति है। यहाँ चन्द्र की कलङ्कता और बीच के छेद की निमित्तता कैसे हुई? यह सन्देह नही करना चाहिए। क्योंकि, 'बीच में छेद कर दिया' इस पदार्थहेतुक काव्यलिङ्ग की अपेक्षा अतिशयोक्ति के द्वारा छिद्र के बीच से प्रदर्शित आकाश की नीलिमा से कलङ्क के अध्यवसित करने के कारण साध्यवसाना लक्षणा से उसी कलङ्क का निश्चयाभिधान के अभाव में भी उसकी विद्यमानता से, तथा कलङ्कत्व के निश्चित होने पर जो चन्द्रमा के बीच के छिद्र से आकाश की नीलिमा की प्रतीति है, उसी निमित्त से बीच के छिद्र की भी उत्प्रेक्षा है।

अगर यह कहें कि दमयन्ती के मुख का ही उसी प्रकार के चन्द्रमा के साराश से निर्मित होने के कारण उत्प्रेक्षा में प्रकृत की उत्प्रेक्षा से किस प्रकार अव्याप्ति होगी, तो इसका यह उत्तर है कि—

'जिस मुखका निर्माण बालेन्दु की समस्त कलाओं के सग्रह का सार भाग लेकर किया गया है, उस अनङ्गमङ्गल गृह के सदृश (मालती के) मुख को बार-बार देखता है।'

यहाँ यदादि शब्दों का मुख में अन्वय रहने पर भी जैसे प्रकृत की उत्प्रेक्षा है, उसी प्रकार दमयन्ती के मुख में उत्प्रेक्षणीय शब्द का अन्वयाभाव है।

(सुधा)

अत्रोदाहरणे कलङ्कवत्त्वेन निमित्तेन वा मध्यबिलत्वेन निमित्तेन चन्द्रमण्डलस्य दमयन्तीवदननिर्माणार्थं हृतसारत्वेनोत्प्रेक्षणम्, न तु प्रकृतस्य दमयन्तीवदनस्योक्तप्रकाराहृतैन्दवसारांशत्वेनोत्प्रेक्षणम्। अतोऽत्र प्रकृतस्योत्प्रेक्षणाभावेनाप्रकृतस्यैव चन्द्रमण्डलस्योत्प्रेक्षणादव्याप्तिरित्यर्थः। कलङ्कवत्त्वमध्यबिलत्वयोर्निमित्तत्वं कथमिति तु न शंक्यम्, कृतमध्यबिलमिति पदार्थहेतुककाव्यलिङ्गमपेक्ष्यातिशयोक्त्या कृतमध्यरन्ध्राकाशनैल्यत्वेन कलङ्कस्याध्यवसितत्वात्, साध्यवसानलक्षणया तेनैव कलङ्कस्य निश्चितत्वेनाभिधानाभावेऽपि तस्य विद्यमानत्वाच्च, कलङ्कत्वेन निश्चिते यन्मध्यरन्ध्राकाशनैल्यं तेन निमित्तेन मध्यबिलस्याप्युत्प्रेक्षितत्वेन लाभाच्च। न च दमयन्तीवदनस्यैव तादृशैन्दवसारांशनिर्मितत्वेनोत्प्रेक्षणे प्रकृतस्योत्प्रेक्षणसत्त्वात् कथमव्याप्तिरिति वाच्यम्। 'सम्भूयेव सुखानि चेतसि परं भूमानमातन्वते। यत्रालोकपथावतारिणि रतिं प्रस्तौति नेत्रोत्सवः।

यद्बालेन्दुकलोच्चयादुपचितैः सारैरिवोत्पादितं, तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखम् ॥' तत् तस्या माल्त्या अनङ्गस्य मंगलार्थं गृहं सुवर्णगृहं वा 'कल्याण मंगलं विद्यात् काञ्चनञ्च तदङ्गम्' इति विश्वकोशोक्तेः, अनंगस्य मङ्गलानां सौकुमार्यादीनामुपचय-हेतूनां गृहं वा मुखं पुनरपि पश्येयम्। आलोकमार्गावतारिणि सम्मुखीभूते यत्र मुखे सति सुखानि सम्भूयेव मिलित्वेव चेतसि परं बाहुल्यं विस्तारयन्ति नेत्रोत्सवो रतिमनुरागं प्रस्तौति स्रवति। किञ्च, यन्मुखं बालेन्दोः कलानां समूहादुपचितैर्गृहीतैरिव सारांशै-रुत्पादितमित्यन्वयः।

(चित्र०)

ननु यथा शब्दतोऽन्वयालाभेऽपि 'ब्राह्मणशतं भोज्यताम्' इत्यत्र प्रधान-मतिलङ्घ्योपसर्जने क्रियान्वयपर्यवसानम्, संख्याया भोजनान्वयायोग्यत्वात्, तथेहापि प्रधानमिन्दुमण्डलमतिलङ्घ्योपसर्जने दमयन्तीवदने इन्दुमण्ड-लाहृतसारांशनिर्मितत्वोत्प्रेक्षापर्यवसान स्यात्, अप्रकृतस्यावर्णनीयत्वादिति चेत्, न; अप्रकृतवर्णनस्याप्यप्रस्तुतप्रशंसारूपेण प्रकृतातिशयाधानार्थतया-न्वेतुं योग्यत्वात्।

(भारती)

अब पुन 'ननु' से शका करते हैं कि 'ब्राह्मणशत भोज्यताम्' यहाँ 'शत' का भोजन की क्रिया में अन्वय नहीं रहने के कारण उसे छोडकर उसके उपसर्जनीभूत ब्राह्मणों में भोजन-क्रिया के अन्वय का शब्द द्वारा अन्वय नहीं रहने पर भी जैसे पर्यवसान है, उसी प्रकार यहाँ भी प्रकृत वर्णनीय अनर्हता से अप्रकृत प्रधान इन्दुमण्डल का भी उल्लघन कर उपसर्जनीभूत दमयन्ती-वदन का इन्दुमण्डल से आकृत असार भाग के द्वारा निर्माण होने के कारण उत्प्रेक्षा से व्याप्ति नहीं है, तो इसका समाधान करते हैं कि यहाँ अप्रकृत वर्णन का भी अपनी ही प्रशसारूप से प्रकृत के अतिशय आधान में प्रयोजकना से वर्णन की योग्यता द्वारा अन्वय की दुर्निवारता है।

(सुधा)

अत्र यद्वादिशब्दानां मुखेऽन्वयमस्वाद्यथा प्रकृतस्योत्प्रेक्षणं तथा दमयन्तीवदने उत्प्रेक्ष-णीयशब्दस्यान्वयाभावात्। न च 'ब्राह्मणशतं भोज्यताम्' इत्यत्र शतस्य भोजनक्रिया-यामन्वयानर्हतया तमतिलङ्घ्य तदुपसर्जनीभूतब्राह्मणेषु भोजनक्रियान्वयस्य शब्दद्वाराऽन्व-यस्यालाभेऽपि पर्यवसानम्, तथात्राप्यप्रकृतस्य वर्णनीयानर्हतया प्रधानमपीन्दुमण्डलम-प्रकृतमुल्लङ्घ्योपसर्जनस्यापि दमयन्तीवदनस्येन्दुमण्डलाहृतसारांशनिर्मितत्वेनोत्प्रेक्षणाख्या-व्याप्तिरिति वाच्यम्, अप्रकृतवर्णनस्यापि स्वप्रशंसारूपेण प्रकृतातिशयाधाने प्रयोजकतया वर्णनयोग्यत्वेनान्वयस्य दुर्वारताया वक्तु शक्यत्वात्।

(चित्र०)

न च वाच्यम् 'इन्दुर्लिप्त इव' इत्यप्रस्तुतप्रशंसोदाहरणान्तर इवात्रापि संभावनामात्रमेव नोत्प्रेक्षेति। तत्र सहृदयहृदयाह्लादिनिमित्ताभावे नोत्प्रेक्षा-सामग्रीपरिपूर्त्यभावादुत्प्रेक्षाया असभवेऽप्यत्र तत्संभवादप्रस्तुतप्रशसया सङ्करोपपत्तेः। तस्मादव्याप्तत्वान्नेद लक्षणं युक्तमिति चेत्? अत्र ब्रूमः—

न तावत् 'हृतसारम्' इत्यादावव्याप्तिः, प्रकृतशब्दस्य विषयत्वाभिमतमात्रपरत्वात् । न चैव 'इन्दुर्लिप्त इव' इत्यादावतिव्याप्तिः, तत्र सीतावदनसनिधाने वस्तुतोऽन्यधर्मत्वे सत्यपीन्दुगताञ्जनलिप्तत्वसंभावनायामन्यधर्मत्वस्याप्रयोजकत्वात्, धर्मस्य सहृदयहृदयाह्लादिनो विवक्षितत्वाद्वा । अन्यत्वेनेत्यस्यान्येन प्रकारेणेत्यर्थ इति न हेतुफलधर्मस्वरूपोत्प्रेक्षास्वव्याप्तिः, यत्र धर्मिणि धर्म्यन्तरं तादात्म्येनोत्प्रेक्ष्यते तत्र धर्म्यन्तरमन्यः प्रकारः, यत्र तु कश्चिद् धर्म एव किञ्चित्प्रति हेतुतया फलतया स्वरूपेण चोत्प्रेक्ष्यते, तत्र स एव धर्मोऽन्यः प्रकार इति सर्वत्राप्यनुगतेः ।

## ( भारती )

प्रकारान्तर से समाधान की आशका कर उसका 'नच' से निराकरण करते हैं। 'इन्दुर्लिप्त इवाञ्जनेन' अर्थात् काजल से लिपा हुआ की तरह इत्यादि अप्रस्तुत प्रशसा के उदाहरण में जैसे समावना मात्र ही उत्प्रेक्षा नहीं है, उसी प्रकार यहाँ भी उत्प्रेक्षणाभाव है । तो इसका उत्तर यह है कि वहाँ सीता के मुखसान्निध्य रूप हेतु का सहृदय-हृदय के आह्लादक रूप निमितत्व के अभाव से अर्थात् उत्प्रेक्षण सामग्री की पूर्ति के अभाव से वहाँ उसकी असभावना में भी 'बीच के छिद्र' का चमत्कारक रहने के कारण अप्रस्तुत से सङ्कर की उत्पत्ति है । अत अव्याप्तिग्रस्तरहने के कारण यह लक्षण उचित नहीं है । 'अत्र ब्रूम' से समाधान करते हैं—

यहाँ प्रकृत शब्द का विषय मात्रपरता का सम्बन्ध दोनों जगहों में समान रूप है। ऐसा करने के कारण ही 'हृतसारमिवेन्दुमण्डलम्' इस उदाहरण में इन्दुमण्डल का भी विषयत्व के अविशेष से उसके उत्प्रेक्षण में अव्याप्ति असभव है । 'इन्दुर्लिप्त इव' इत्यादि में भी अतिव्याप्ति नहीं है । क्योंकि सीता के मुखसान्निध्य को सहृदय-हृदय के आह्लादकत्व का अभाव है। किन्तु 'अन्यत्वेन' इस विशेषण का भी दूसरे ढग से लक्षण में अन्यपरता व्याख्येय है। इससे पूर्व कथित हेतुफलधर्मस्वरूप उत्प्रेक्षा में भी अव्याप्ति नहीं है । उसे ही कहते हैं कि जहाँ धर्मो में दूसरे धर्म का तादात्म्य सम्बन्ध से उत्प्रेक्षा है, वहाँ अन्य धर्म की ही अन्यप्रकारता है और जहाँ धर्म ही किसी के प्रति हेतुत्वादि से उत्प्रेक्षित है, वहाँ धर्म की अन्यप्रकारता है

## ( सुधा )

**प्रकारान्तरेण समाधानमाशङ्क्य निराकरोति—न चेति । 'इन्दुर्लिप्त इवाञ्जनेन' इत्यादावप्रस्तुतप्रशंसोदाहरणे यथा सम्भावनामात्रं नोत्प्रेक्षणं तथेहाप्युत्प्रेक्षणाभाव एवेति वाच्यम्, तत्र सीतावदनसान्निध्यरूपहेतोः सहृदयहृदयाह्लादिरूपनिमित्तत्वाभावादुत्प्रेक्षणसामग्रीपूर्तेरभावात् तत्र तदसम्भवेऽपि मध्यबिलत्वस्य च तच्चमत्कारित्वसम्भवेनाप्रस्तुतसङ्करोपपत्तेः । तस्मादव्याप्तिग्रस्तत्वाद् नेदं लक्षणं युक्तमिति पूर्वपक्षग्रन्थार्थः । अत्र समाधत्ते अत्र—ब्रूम इत्यादिना । प्रकृतशब्दस्य विषयमात्रपरत्वम्, तस्य चोभयत्र समानत्वम्, तथा च 'हृतसारमिवेन्दुमण्डलम्' इत्यत्रेन्दुमण्डलस्यापि विषयत्वाविशेषेण तदुत्प्रेक्षणेऽव्याप्तेरसम्भवात् । 'इन्दुर्लिप्त इव' इत्यादावपि नातिव्याप्तिः, सीतावदनसान्निध्यस्य सहृदयहृदयाह्लादित्वाभावात् । किञ्च तस्यान्यधर्मत्वे सत्यपि इन्दुगताञ्जनलिप्तत्वसम्भावनायां तस्य प्रयोजकत्वाभावात् । किञ्चान्यत्वेनेत्यस्यापि अन्येन प्रकारेणेत्यर्थपरत्वं लक्षणे व्याख्येयम् । तेन पूर्वोक्तासु हेतुफलधर्मस्वरूपोत्प्रेक्षासु नाव्याप्तिः । तदेवाह—**

यत्रेति। यत्र धर्मिणि धर्म्यन्तरस्य तादात्म्येनोत्प्रेक्षणम्, तत्र धर्म्यन्तरस्यैवान्यप्रकारकत्वम्, यत्र धर्म एव किञ्चित्प्रति हेतुत्वादिनोत्प्रेक्ष्यते, तत्र धर्मस्यान्यप्रकारत्वम्।

(चित्र०)

यद्वा हेतुफलधर्मस्वरूपोत्प्रेक्षोदाहरणेष्वपि तादात्म्येनैवोत्प्रेक्षा। तथा हि—'सैषा स्थली यत्र विचिन्वता त्वाम्', 'चोलस्य यद्भीतिपलायितस्य' इत्यादिहेतुफलोत्प्रेक्षोदाहरणयोस्तावद्विश्लेषदुःखललाटाक्षरदर्शनादिधर्मो हेतुतया फलतया वा नोत्प्रेक्ष्यते', किं तु नूपुरयुगादिधार्मिकं यन्निश्चलत्वकण्टकसंश्लेषादिनिमित्तकं मौनव्यापाटनादिक तदेव दुःखहेतुकमौनललाटाक्षरदर्शनार्थव्यापाटनादितादात्म्येनोत्प्रेक्ष्यते।

(भारती)

वहाँ हेतूत्प्रेक्षा में तादात्म्य सम्बन्ध से उत्प्रेक्षण बताते हैं। वैसा करने से 'सैषा स्थली यत्र विचिन्वता त्वाम्' इस उदाहरण में वियोगजन्य दुःखरूप धर्म की हेतुता से उत्प्रेक्षण नहीं है, किन्तु नूपुरधर्मिक जो निश्चलत्वनिमित्तक मौन है, उसका ही दुःखहेतुक मौन की तादात्म्य सम्बन्ध से उत्प्रेक्षा है। 'चोलस्य यद् भीतिपलायितस्य' इत्यादि फलोत्प्रेक्षा के उदाहरण में भी ललाटाक्षर के दर्शनात्मक धर्म का फलत्व से उत्प्रेक्षण नहीं है, बल्कि द्रुमधर्मिक जो कण्टकश्लेष के निमित्त व्यापाटन है, उसका ही ललाटाक्षर देखने के लिए व्यापाटन का अभेद से उत्प्रेक्षण है।

(सुधा)

प्राचां मतमनुसरन्नभेदेनोत्प्रेक्षणं हेत्वादिषु प्रतिपादयति—यद्वेति। तत्र हेतूत्प्रेक्षायां तादात्म्येनोत्प्रेक्षणमाह—तथा हीति। 'सैषा स्थली' इत्यत्र विश्लेषदुःखरूपधर्मस्य हेतुतया नोत्प्रेक्षणम्, किन्तु नूपुरधर्मिकं यन्निश्चलत्वनिमित्तकं मौनम्, तस्यैव दुःखहेतुकमौनतादात्म्येनोत्प्रेक्षणात्। 'चोलस्य यत्' इत्यादिफलोत्प्रेक्षोदाहरणेऽपि ललाटाक्षरदर्शनात्मकधर्मस्य फलत्वेन नोत्प्रेक्षणम्, अपि तु द्रुमधर्मिकं यत् कण्टकश्लेषनिमित्तं व्यापाटनम्, तस्यैव ललाटाक्षरदर्शनार्थव्यापाटनाभेदेनोत्प्रेक्षणाच्च।

(चित्र०)

अवश्यं च द्विविधस्यापि मौनादेस्तादात्म्येनाध्यवसाय आस्थेयः। अन्यथा निश्चलत्वादिहेतुके स्वाभाविकमौनादौ दुःखादेर्हेतुत्वादिनोत्प्रेक्षणमसमञ्जसं स्यात्।

अङ्गीकृतश्च 'सैषा स्थली' इत्यादौ दुःखादिर्धर्म एव मौनादिहेतुतया नूपुरादिगतत्वेनोत्प्रेक्ष्यत इति वदताप्यलङ्कारसर्वस्वकृता द्विविधस्य मौनादेरभेदाध्यवसायः। 'हेतूत्प्रेक्षायां यस्य प्रकृतसम्बन्धिनो धर्मस्य हेतुरुत्प्रेक्ष्यते स धर्मोऽध्यवसायवशादभिन्न उत्प्रेक्षानिमित्तत्वेनाश्रीयते' इत्यादितद्वचनात्।

(भारती)

व्यतिरेक में हेतुदोष 'अवश्यम्' से बताते हैं—दो प्रकार के मौनादि का अभेद से अध्यवसाय

के लिए आवश्यक है। अन्यथा निश्चलत्व आदिहेतुक स्वाभाविक मौनादि में दु:खादि का हेतुत्वादि से उत्प्रेक्षण की असामञ्जस्यापत्ति होगी।

दु:खादि धर्म की ही मौनादिहेतुता से नूपुरादिगतत्व से उत्प्रेक्षण कहने वाले अलङ्कारसर्वस्वकार ने दो प्रकार के मौनादि का अभेदसम्बन्ध से अध्यवसाय की स्वीकृति दी है। अलङ्कारसर्वस्व में लिखा है—"हेतूत्प्रेक्षा में प्रकृतसम्बन्धी जो धर्महेतु का उत्प्रेक्षण है, वही धर्म अध्यवसायवश अभिन्नभाव से उत्प्रेक्षा की हेतुता का आश्रय ग्रहण करता है।

(सुधा)

**व्यतिरेके हेतुदूषणमाह—आवश्यमिति। द्विविधमौनादेरभेदेनाध्यवसाय आवश्यकः। अन्यथा निश्चलत्वादिहेतुकस्वाभाविकमौनादौ दुःखादेर्हेतुत्वादिनोत्प्रेक्षणस्यासामञ्जस्यापत्तेः। अलङ्कारसर्वस्वोक्ति प्रमाणयति—अङ्गीकृतमित्यादिना। दुःखादिधर्मस्यैव मौनादिहेतुतया नूपुरादिगतत्वेनोत्प्रेक्षणमिति वदता अलङ्कारसर्वस्वकृता द्विविधमौनादेरभेदाध्यवसानाङ्गीकारस्य स्वीकारात्। तद्ग्रन्थोक्तिमप्याह—हेतूत्प्रेक्षायामिति। प्रकृतसम्बन्धिनो यस्य धर्मस्य हेतोरुत्प्रेक्षणम्, स धर्मोऽध्यवसायवशात् अभिन्न उत्प्रेक्षाहेतुतयाश्रीयत इति तद्ग्रन्थार्थः।**

(चित्र०)

आवश्यक चान्यत्रापि क्वचित्क्वचिद्धेतूत्प्रेक्षोदाहरणे निमित्तांशे तादात्म्याध्यवसायाश्रयणम्। तथा—

उन्मेष यो मम न सहते जातिवैरी निशाया-
मिन्दोरिन्दीवरदलदृशा तस्य सौन्दर्यदर्पः।
नीतः शान्ति प्रसभमनया वक्त्रकान्त्येति हर्षा-
ल्लग्ना मन्ये ललिततनु ते पादयोः पद्मलक्ष्मीः॥

(भारती)

इसी प्रकार काव्यप्रकाशादि के उदाहरणों में भी कहीं कहीं हेतूत्प्रेक्षा के उदाहरणों के निमित्तांश में भी तादात्म्य सम्बन्ध से अध्यवसाय आश्रित है। जैसे—

'अरी सुन्दरी! मालूम तो ऐसा पड़ता है कि कमल की सुन्दरता इसलिए प्रसन्नतापूर्वक तुम्हारे पैरों में आ विराजी है कि इन्दीवरनयनी तुम्ही एक ऐसी रही जिसने अपनी मुखशोभा से बलपूर्वक उस चन्द्रमा का सौन्दर्य-दर्प चूर कर दिया—जो रात में उस कमल की सुन्दरता का शत्रु बन गया, तथा उस कमल की शोभा के उल्लास को सहन न कर सका।'

(सुधा)

**एवमलङ्कारसर्वस्वोक्तिमुपन्यस्य प्रकाशोदाहरणेऽपि तदाश्रयणं प्रतिपादयति—आवश्यकञ्चान्यत्रापीत्यादिना। उन्मेषमिति। 'जात्या स्वभावेनैव वैरी शत्रुर्य इन्दुः, मम निशायाम् उन्मेषं विकास न सहते, तस्येन्दोः सौन्दर्यगर्वः, इन्दीवरदलदृशा अनया मुखकान्त्या प्रसभं बलात्कारेण शान्ति नीत इति हर्षात् हे ललिततनु ते पादयोः पद्मलक्ष्मीर्लग्ना इत्यहं मन्ये, इत्यन्वयः।**

